प्रकाशं सुभ्रून्यासं शक्रचापैकमानम् । लोकातार
पुंडरीकायताक्षं विद्युच्चैलं चाश्रयेऽहं त्वपूर्वम् ॥ १
दीनं हीनं सेवया दैवगत्या पापैस्तापैः पूरितं मे श
रम् । लोभाक्रांतं शोकमोहादिविद्धं कृपादृ
पाहि मां वासुदेव ॥ १७ ॥ ये भक्त्याद्यां ध्या
मानां मनोज्ञां व्यक्तिं विष्णोः षोडशश्लोकपुष्पैः
स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्म
स्यं प्रयांति ॥ १८ ॥ पद्मेरितमिदं पुण्यं शि
परिभाषितम् । धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्य
परम् ॥ १९ ॥ पठंति ये महाभागास्ते मुच्यंतेऽह
ऽखिलात् । धर्मार्थकाममोक्षाणां परत्रेह फ
दम् ॥ २० ॥ इति श्रीकल्किपुराणेऽनुभाग
भविष्ये पद्माप्रोक्तो विष्णुस्तवराजः संपूर्णः

## १७. नारायणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारायण नारायण जय गोवि
हरे । नारायण नारायण जय गोपाल हरे ॥ ध्रु
करुणापारावारा वरुणालयगंभीरा । नाराय
॥ १ ॥घननीरदसंकाशा कृतकलिकल्मषनाश

नारायण० ॥ २ ॥ यमुनातीरविहारा धृतकौस्तुभ-मणिहारा । नारायण० ॥ ३ ॥ पीतांबरपरिधाना सुरकल्याणनिधाना । नारायण० ॥ ४ ॥ मंजुलगुंजाभूषा मायामानुषवेषा । नारायण० ॥ ५ ॥ राधाऽधरमधुरसिका रजनीकरकुलतिलका । नारायण० ॥ ६ ॥ मुरलीगानविनोदा वेदस्तुतभूपादा । नारायण० ॥ ७ ॥ बर्हिनिबर्हापीडा नटनाटकफणिक्रीडा । नारायण० ॥ ८ ॥ वारिजभूषाभरणा राजीवरुक्मिणीरमणा । नारायण० ॥ ९ ॥ जलरुहदलनिभनेत्रा जगदारंभकसूत्रा । नारायण० १० ॥ पातकरजनीसंहर करुणालय मामुद्धर । नारायण० ॥ ११ ॥ अघबकक्षयकंसारे केशव कृष्ण मुरारे । नारायण० ॥ १२ ॥ हाटकनिभपीतांबर अभयं कुरु मे मावर । नारायण० ॥ १३ ॥ दशरथराजकुमारा दानवमदसंहारा । नारायण० ॥ १४ ॥ गोवर्धनगिरिरमणा गोपीमानसहरणा । नारायण० ॥ १५ ॥ सरयूतीरविहारा सज्जनऋषिमंदारा । नारायण० ॥ १६ ॥ विश्वामित्रमखत्रा विविधप-

५ वि०

रासुचारित्रा । नारायण० ॥ १७ ॥ ध्वजवज्रा
शपादा धरणीसुतसहमोदा । नारायण० ॥ १८
जनकसुताप्रतिपाला जय जय संस्मृतिलीला
नारायण० ॥ १९ ॥ दशरथवाग्धृतिभारा दंडक
संचारा । नारायण० ॥ २० ॥ मुष्टिकचाणूरसं
मुनिमानसविहारा । नारायण० ॥ २१ ॥ वा
विनिग्रहशौर्या वरसुग्रीवहितार्या । नारायण० ॥२
मां मुरलीकरधीवर पालय पालय श्रीधर। नारा
॥ २३ ॥ जलनिधिबंधनधीरा रावणकंठविद
नाराय० ॥ २४ ॥ ताटीमददलनाढ्या नटगु
विधधनाढ्या । नारायण० ॥ २५ ॥ गौतमप
जन करुणाघनावलोकन । नारायण० ॥ २
संभ्रमसीताहारा साकेतपुरविहारा । नारा
॥ २७ ॥ अचलोद्धृतिचंचत्कर भक्तानुग्रहत
नारायण० ॥ २८ ॥ नैगमगानविनोदा रक्षःसु
ह्लादा । नारायण० ॥ २९ ॥ भारतियतिवर
नामामृतमखिलांतर । नारायण नारायण
गोपाल हरे ॥ ३० ॥ इति श्रीमच्छंकराचार्य
चितं नारायणस्तोत्रं संपूर्णम् ॥

## १८. विष्णोरष्टाविंशतिनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अर्जुन उवाच । किं नु नाम-
सहस्राणि जपते च पुनः पुनः । यानि नामानि
दिव्यानि तानि चाचक्ष्व केशव ॥ १ ॥ श्रीभगवा-
नुवाच । मत्स्यं कूर्मं वराहं च वामनं च जनार्द-
नम् । गोविंदं पुंडरीकाक्षं माधवं मधुसूदनम् ॥ २ ॥
पद्मनाभं सहस्राक्षं वनमालिं हलायुधम् । गोवर्धनं
हृषीकेशं वैकुंठं पुरुषोत्तमम् ॥ ३ ॥ विश्वरूपं वासु-
देवं रामं नारायणं हरिम् । दामोदरं श्रीधरं च वे-
दांगं गरुडध्वजम् ॥ ४ ॥ अनंतं कृष्णगोपालं जपतो
नास्ति पातकम् । गवां कोटिप्रदानस्य अश्वमेधशतस्य
च ॥ ५ ॥ कन्यादानसहस्राणां फलं प्राप्नोति मान-
वः । अमायां वा पौर्णमास्यामेकादश्यां तथैव च
॥ ६ ॥ संध्याकाले स्मरन्नित्यं प्रातःकाले तथैव च ।
मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥
इति श्रीकृष्णार्जुनसंवादे विष्णोरष्टाविंशतिनामस्तोत्रं
संपूर्णम् ॥

## १९: मुकुंदमाला ।

श्रीगणेशाय नमः ॥ वंदे मुकुंदमरविंददलायत
कुंदेंदुशंखदशनं शिशुगोपवेषम् । इंद्रादिदेवगण
तपादपीठं वृंदावनालयमहं वसुदेवसूनुम् ॥ १
श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भव
ठनकोविदेति । नाथेति नागशयनेति जगन्निवा
त्यालापिनं प्रतिदिनं कुरु मां मुकुंद ॥ २ ॥ ज
जयतु देवो देवकीनंदनोऽयं जयतु जयतु कृ
वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्याम
कोमलांगो जयतु जयतु पृथ्वीभारनाशो मुकुंदः॥
मुकुंद मूर्ध्ना प्रणिपत्य याचे भवंतमेकांतमियंतमर्थं
अविस्मृतिस्त्वच्चरणारविंदे भवे भवे मेऽस्तु तवप्रस
दात् ॥ ४ ॥ श्रीगोविंदपदांभोजमधुनो महदद्भुतम्
यत्पायिनो न मुंचंति मुंचंति यदपायिनः ॥५॥ ना
वंदे तव चरणयोर्द्वंद्वमद्वंद्वहेतोः कुंभीपाकं गुरुमपि
नारकं नापनेतुम् । रम्यारामांमृदुतनुलतानंद
नापि रंतुं भावे भावे हृदयभवने भावयेयं भव
न्तम् ॥ ६ ॥ नास्था धर्मे न वसुनिचये नैव कामो

भोगे सद्भाव्यं तद्भवतु भगवन्पूर्वकर्मानुरूपम् । तत्प्रार्थ्यं मम बहु मतं जन्मजन्मांतरेऽपि त्वत्पादांभोरुहयुगगता निश्चला भक्तिरस्तु ॥७ ॥ दिवि वा भुवि वा ममास्तु वासो नरके वा नरकांतक प्रकामम् । अवधीरितशारदारविंदौ चरणौ ते मरणे विचिंतयामि ॥ ८ ॥ सरसिजनयने सशंखचक्रे मुरभिदि मा विरमेह चित्त रंतुम् । सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ ९ ॥ मा भैर्मंद मनो विचिंत्य बहुधा यामीश्चिरं यातना नैवामी प्रभवंति पापरिपवः स्वामी ननु श्रीधरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ १०॥ भवजलधिगतानां द्वंद्ववाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम् । विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ ११ ॥ रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गगाणाम् । शरणमशरणानामेक एवातुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम्

णाम् ॥ १२ ॥ अपराधसहस्रसंकुलं पतितं भवार्णवोदरे । अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥१३॥ मा मे स्त्रीत्वं मा च मे स्त्रैणभावो मा मूर्खत्वं मा कुदेशेषु जन्म । मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तोऽहमेव यम् ॥ १४ ॥ कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृतः स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायैव समर्पयामि ॥ १५ ॥ यत्कृतं यत्करिष्यामि तत्सर्वं न मया कृतम् । त्वया कृतं तु फलभुक्त्वमेव मधुसूदन ॥ १६ ॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मा स्म गाः कातरत्वम् । सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १७ ॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसंघाकुले च । संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्पादांभोजे वरद भवतो भक्तिभावं प्रदेहि ॥ १८ ॥ पृथ्वी रेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिंगो लघुस्तेजो

मलनं भक्ततनुतरं रंध्रं सुसूक्ष्मं नमः। क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा दृष्टा यत्र तारको विजयते श्रीपादधूलीकणः ॥ १९ ॥ आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं मेदछेदपदानि पूर्तविधयः सर्वे हुतं भस्मनि। तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वंद्वांभोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २० ॥ आनंद गोविंद मुकुंद राम नारायणानंत निरामयेति। वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥ २१ ॥ क्षीरसागरतरंगसीकरासारतारकितचारुमूर्तये। भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ २२ ॥ इति श्रीकुलशेखरेण राज्ञा विरचिता मुकुंदमाला संपूर्णा।

## २०. श्रीविष्णोःषोडशनामस्तोत्रम्।

श्रीगणेशाय नमः ॥ औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम्। शयने पद्मनाभं च विवाहे च प्रजापतिम् ॥ १ ॥ युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम्। नारायणं तनुत्यागे श्रीधरं प्रियसं-

गमे ॥ २ ॥ दुःस्वप्ने स्मर गोविन्दं संकटे मधु
नम् । कानने नारसिंहं च पावके जलशा
॥ ३ ॥ जलमध्ये वराहं च पर्वते रघुनन्दन
गमने वामनं चैव सर्वकार्येषु माधवम् ॥ ४
षोडशैतानि नामानि प्रातरुत्थाय यः पठे
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ५ ॥
श्रीविष्णोःषोडशनामस्तोत्रं सम्पूर्णम् ॥

## २१ विष्णुशतनामस्तोत्रम् ।

श्रीगणेशाय नमः॥ नारद उवाच॥ॐ वासुदेवं
केशं वामनं जलशायिनम् । जनार्दनं हरिं कृ
वक्षं गरुडध्वजम् ॥ १ ॥ वाराहं पुंडरी
नृसिंहं नरकांतकम् । अव्यक्तं शाश्वतं विष्णु
मजमव्ययम् ॥ २ ॥ नारायणं गदाध्यक्षं
कीर्तिभाजनम् । गोवर्धनोद्धरं देवं भूधरं
श्वरम्॥ ३ ॥ वेत्तारं यज्ञपुरुषं यज्ञेशं यज्ञवाह
चक्रपाणिं गदापाणिं शंखपाणिं नरोत्तमम् ॥
वैकुंठं दुष्टदमनं भूगर्भं पीतवाससम् । त्रि

त्रिकालज्ञं त्रिमूर्तिं नन्दकेश्वरम् ॥५॥ रामं रामं हय-
ग्रीवं भीमं रौद्रं भवोद्भवम् । श्रीपतिं श्रीधरं श्रीशं
मङ्गलं मङ्गलायुधम् ॥ ६ ॥ दामोदरं दमोपेतं
केशवं केशिसूदनम् । वरेण्यं वरदं विष्णुमानंदं
वसुदेवजम् ॥ ७ ॥ हिरण्यरेतसं दीप्तं पुराणं
पुरुषोत्तमम् । सकलं निष्कलं शुद्धं निर्गुणं गुणशा-
श्वतम् ॥८॥ हिरण्यतनुसंकाशं सूर्यायुतसमप्रभम् ।
मेघश्यामं चतुर्बाहुं कुशलं कमलेक्षणम् ॥ ९ ॥
ज्योतीरूपमरूपं च स्वरूपं रूपसंस्थितम् । सर्वज्ञं
सर्वरूपस्थं सर्वेशं सर्वतोमुखम् ॥ १० ॥ ज्ञानं
कूटस्थमचलं ज्ञानदं परमं प्रभुम् । योगीशं योग-
निष्णातं योगिनं योगरूपिणम् ॥ ११ ॥ ईश्वरं
सर्वभूतानां वंदे भूतमयं प्रभुम् । इति नामशतं
दिव्यं वैष्णवं खलु पापहम् ॥ १२ ॥ व्यासेन क-
थितं पूर्वं सर्वपापप्रणाशनम् । यः पठेत्प्रातरुत्थाय
स भवेद्वैष्णवो नरः ॥ १३ ॥ सर्वपापविशुद्धात्मा
विष्णुसायुज्यमाप्नुयात् । चांद्रायणसहस्राणि कन्या-
दानशतानि च ॥ १४ ॥ गवां लक्षसहस्राणि मुक्ति

भागी भवेन्नरः । अश्वमेधायुतं पुण्यं फलं प्राप्नो
मानवः ॥ १५ ॥ इति श्रीविष्णुपुराणे विष्णुशत
मस्तोत्रं सम्पूर्णम् ॥

## २२. परमेश्वरस्तुतिसारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ त्वमेकः शुद्धोऽसि त्वयि निगम
बाह्या मलमयं प्रपंचं पश्यंति भ्रमपरवशाः पापनि
रताः । बहिस्तेभ्यः कृत्वा स्वपदशरणं मानय वि
गजेंद्रे दृष्टं ते शरणद वदान्यं स्वपददम् ॥ १
न सृष्टस्ते हानिर्यदि हि कृपयातोऽवसि च मां
यानेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे । भ
मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां न रिक्तां
याच्ञां स्वजनरत कर्तुं भव हरे ॥ २ ॥ कदा
भोः स्वामिन्नियतमनसा त्वां हृदि भजन्नभद्रे सं
ह्यनवरतदुःखेऽतिविरसः । लभेयं तां शांतिं प
मुनिभिर्या ह्यधिगता दयां कृत्वा मे त्वं वितर
शांतिं भवहर॥३॥ विधाता चेद्विश्वं सृजति सृजत
शुभकृतिं विधुश्चेत्पाता माऽवतु जनिमृतेर्दुःखजल

प्राप्तं हरः संहर्ता संहरतु मम शोकं सजनकं यथाऽहं
गुशतमुक्तः स्यां किमपि तु तथा ते विदधताम् ॥ ४॥ अहं
ब्रह्मानंदस्त्वमपि च तदाख्यः सुविदितस्ततोऽहं भिन्नो
नो कथमपि भवतः श्रुतिदृशा । तथा चेदानीं त्वं
त्वयि मम निमेदस्य जननीं स्वमायां संवार्य प्रभव
निगम भेदं निरसितुम् ॥ ५ ॥ कदाऽहं हे स्वामिन्
पापं जनिमृतिमयं दुःखनिबिडं भवं हित्वा सत्येऽनवर-
य वितसुखे स्वात्मवपुषि । रमे तस्मिन्नित्यं निखिलमुनयो
॥ ब्रह्मरसिका रमंते यस्मिंस्ते कृतसकलकृत्या यतिव-
मां राः ॥ ६ ॥ पठंत्येके शास्त्रं निगममपरे तत्परतया
। यजंत्यन्ये त्वां वै ददति च पदार्थांस्तव हितान् ।
रिक्तं अहं तु स्वामिंस्ते शरणमगमं संसृतिभयाद्यथा ते
कदा भीतिः स्याद्धितकर तथा त्वं कुरु विभो ॥ ७ ॥
संअहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः श्रुतौ
पर सिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि विभुतः । इति
र ज्ञाते तत्त्वे भवति च परः संसृतिलयादतस्तत्त्वाज्ञानं
जत मयि विघटयेस्त्वं हि कृपया ॥ ८ ॥ अनादौ सं-
जल सारे जनिमृतिमये दुःखितमना मुमुक्षुः सन्कश्चिद्भ-

जाति हि गुरुं ज्ञानपरमम् । ततो ज्ञात्वा यं वै
ति न पुनः क्लेशनिवहैर्भजेऽहं तं देवं भवति
परो यस्य भजनात् ॥ ९ ॥ विवेको वैराग्यं
शमदमाद्याः षडपरे मुमुक्षा मे नास्ति प्रभवति
ज्ञानममलम् । अतः संसाराब्धेस्तरणसरणिं म
दिशन् स्वबुद्धिं श्रौतीं मे वितर भगवंस्त्वं हि कृ
॥ १० ॥ कदाऽहं भो स्वामिन्निगमसमतिवेद्यं
मयं चिदानंदं नित्यं श्रुतिहृतपरिच्छेदनिवह
त्वमर्थाभिन्नं त्वामभिरम इहात्मन्यविरतं मनो
वं मे सफलय वदान्य स्वकृपया ॥ ११ ॥
सर्वं वै प्रियमसुधनादि प्रभवति स्वयं नान्यार्थं
प्रिय इति च वेदे प्रविदितम् । स आत्मा
जनिमृतिमतां वेदगदितस्ततोऽहं तं वेद्यं सततम्
यामि शरणम् ॥ १२ ॥ मया त्यक्तं सर्वं कथ
भवेत्स्वात्मनि मतिस्त्वदीया माया मां प्रति दु
रीतं कृतवती । ततोऽहं किं कुर्यां नहि मम मतिः
चरति दयां कृत्वा नाथ स्वपदशरणं देहि शि
॥ १३ ॥ नगा दैत्याः कीशा भवजलधिपारं

गमितास्त्वया चान्ये स्वामिन्किमिति समयेऽस्मिन्क्लयितवान् । न हेलां त्वं कुर्यास्त्वयि निहितसर्वे मयि विभो नहि त्वाऽहं हित्वा कमपि शरणं चान्यमगमम् ॥ १४ ॥ अनंताद्या विज्ञा न गुणजलधेस्तेंऽतमगमन्नतः पारं यायात्तव गुणगणानां कथमयम् । गृणन्यावद्धित्वा जनिमृतिहरं याति परमां गतिं योगिप्राप्यामिति मनसि बुद्ध्वाहमनवम् ॥ १५ ॥ इति श्रीमन्मौक्तिकदासोदासीनशिष्यब्रह्मानंदविरचितं परमेश्वरस्तुतिसारस्तोत्रं संपूर्णम् ॥

## २३. भगवच्छरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सच्चिदानंदरूपाय भक्तानुग्रहकारिणे । मायानिर्मितविश्वाय महेशाय नमो नमः ॥ १ ॥ रोगा हरंति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहंति चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीनबंधो ॥ २ ॥ देहो विनश्यति सदा परिणामशीलश्चित्तं च खिद्यति सदा विषयानुरागि । बुद्धिः सदा हि रमते विषयेषु नांतस्तस्मात्त्वमद्य शरणं

मम दीनबंधो ॥ ३ ॥ आयुर्विनश्यति यथाम
स्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः । वृ
प्रधावति यथा मृगराजपत्नी तस्मात्त्वमद्य श
मम दीनबंधो ॥ ४ ॥ आयाद्व्ययो मम भवत्यवि
विनीते कामादयो हि बलिनो निबलाः शमाद्या
मृत्युर्यदा तुदति मां बत किं वदेयं तस्मात्० ॥५
तप्तं तपो नहि कदाऽपि मयेह तन्वा वाण्या त
नहि कदाऽपि तपश्च तप्तम् । मिथ्याभिभाषणपरे
न मानसं हि तस्मात्० ॥ ६ ॥ स्तब्धं मनो म
सदा नहि याति सौम्यं चक्षुश्च मे न तव पश्य
विश्वरूपम् । वाचा तथैव न वदेन्मम सौम्यवा
तस्मात्० ॥ ७ ॥ सत्त्वं न मे मनसि याति र
स्तमोभ्यां विद्धे तदा कथमहो शुभकर्मवार्ता ।
साक्षात्परंपरतया सुखसाधनं तत्तस्मात्० ॥ ८ न
पूजा कृता नहि कदाऽपि मया त्वदीया मं
त्वदीयमपि मे न जपेद्रसज्ञा । चित्तं न मे स्मर प्र
ते चरणौ ह्यवाप्य तस्मात्० ॥ ९ ॥ यज्ञो द्र
मेऽस्ति हुतिदानदयादियुक्तो ज्ञानस्य साधनगणं त

न विवेकमुख्यः । ज्ञानं च साधनगणेन विना क्क मोक्षस्तस्मात्० ॥ १० ॥ सत्संगतिर्हि विदिता तव भक्तिहेतुः साऽप्यद्य नास्ति बत पंडितमानिनो मे । तामंतरेण नहि सा क्क च बोधवार्ता तस्मात्० ॥ ११ ॥ दृष्टिर्न भूतविषया समताभिधाना वैषम्यमेव तदियं विषयीकरोति । शांतिः कुतो मम भवेत्समता न चेत्स्यात्तस्मात्० ॥ १२ ॥ मैत्री समेषु न च मेऽस्ति कदापि नाथ दीने तथा न करुणा मुदिता च पुण्ये । पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मात्० ॥ १३ ॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नांतर्मुखं भवति तामविहाय तस्य । कांतर्मुखत्वमपहाय सुखस्य वार्ता तस्मात्० ॥ १४ ॥ त्यक्तं गृहाद्यपि मया भवतापशांत्यै नासीदसौ हृतहृदो मम मायया ते । सा चाधुना किमु विधास्यति नेति जाने तस्मात्० ॥ १५ ॥ प्राप्ता धनं गृहकुटुंबगजाश्वदारा राज्यं यदैहिकमथें-द्रपुरश्च नाथ । सर्वं चिनश्वरमिदं न फलाय कस्मै तस्मात्० ॥ १६ ॥ प्राणान्निरुध्य विधिना न

कुतो हि योगो योगं विनाऽस्ति मनसः स्थिरत्
कुतो मे । तां वै विना मम न चेतसि शांतिवा
तस्मात्० ॥ १७ ॥ ज्ञानं यथा मम भवेत्कृप
गुरूणां सेवां तथा न विधिनाकरवं हि तेषाम्
सेवाऽपि साधनतया विदितास्ति चित्ते तस्मात्
॥ १८ ॥ तीर्थादिसेवनमहा विधिना हि ना
नाकारि येन मनसो मम शोधनं स्यात् । शुं
विना न मनसोऽवगमापवर्गौ तस्मात्० ॥ १९
वेदांतशीलनमपि प्रमितिं करोति ब्रह्मात्मनः प्री
तिसाधनसंयुतस्य । नैवाऽस्ति साधनलवो म
नाथ तस्यास्तस्मात्० ॥ २० ॥ गोविंद शंकर ह
गिरिजेश मेश शंभो जनार्दन गिरीश मुकुंद साम्ब
नान्या गतिर्मम कथंचन वां विहाय तस्मात्प्र
मम गतिः कृपया विधेया ॥ २१ ॥ एतत्त
भगवदाश्रयणाभिधानं ये मानवाः प्रतिदिनं प्रणत
पठंति । ते मानवा भवरतिं परिभूय शां
गच्छंति किंच परमात्मनि भक्तिमद्धा ॥ २२
इतिश्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मानंदविरचि
भगवच्छरणस्तोत्रं संपूर्णम् ॥

## २४. हरिनाममालास्तोत्रम् ।

श्रीगणेशाय नमः ॥ गोविंदं गोकुलानंदं गोपालं गोपिवल्लभम् । गोवर्धनोद्धरं धीरं तं वंदे गोमतीप्रियम् ॥ १ ॥ नारायणं निराकारं नरवीरं नरोत्तमम् । नृसिंहं नागनाथं च तं वंदे नरकांतकम् ॥ २ ॥ पीतांबरं पद्मनाभं पद्माक्षं पुरुषोत्तमम् । पवित्रं परमानंदं तं वंदे परमेश्वरम् ॥ ३ ॥ राघवं रामचंद्रं च रावणारिं रमापतिम् । राजीवलोचनं रामं तं वंदे रघुनंदनम् ॥ ४ ॥ वामनं विश्वरूपं च वासुदेवं च विठ्ठलम् । विश्वेश्वरं विभुं व्यासं तं वंदे वेदवल्लभम् ॥ ५ ॥ दामोदरं दिव्यसिंहं दयालुं दीननायकम् । दैत्यारिं देवदेवेशं तं वंदे देवकीसुतम् ॥ ६ ॥ मुरारिं माधवं मत्स्यं मुकुंदं मुष्टिमर्दनम् । मुंजकेशं महाबाहुं तं वंदे मधुसूदनम् ॥ ७ ॥ केशवं कमलाकांतं कामेशं कौस्तुभप्रियम् । कौमोदकीधरं कृष्णं तं वंदे कौरवांतकम् ॥ ८ ॥ भूधरं भुवनानंदं भूतेशं भूतनाय-

कम् । भावनैकं भुजंगेशं तं वंदे भवनाशनि
॥ ९ ॥ जनार्दनं जगन्नाथं जगज्जाड्यविनाशकम्
जामदग्न्यं वरं ज्योतिस्तं वंदे जलशायिनम् ॥ १०
चतुर्भुजं चिदानंदं चाणूरमल्लमर्दनम् । चरा
गतं देवं तं वंदे चक्रपाणिनम् ॥ ११ ॥ श्री
करं श्रियो नाथं श्रीधरं श्रीवरप्रदम् । श्रीवत्सल
सौम्यं तं वंदे श्रीसुरेश्वरम् ॥ १२ ॥ योगी
यज्ञपतिं यशोदानंददायकम् । यमुनाजलकल्लोल
वंदे यदुनायकम् ॥ १३ ॥ शालग्रामशिला
शंखचक्रोपशोभितम् । सुरासुरसदासेव्यं तं
साधुवल्लभम् ॥ १४ ॥ त्रिविक्रमं तपोमूर्तिं त्रि
धाघौघनाशनम् । त्रिस्थलं तीर्थराजेंद्रं तं वंदे तु
सीप्रियम् ॥ १५ ॥ अनंतमादिपुरुषमच्युतं
वरप्रदम् ॥ आनंदं च सदानंदं तं वंदे चाघना
नम् ॥ १६ ॥ लीलया धृतभूभारं लोकसत्त्वैक
दितम् । लोकेश्वरं च श्रीकांतं तं वंदे लक्ष्मणप्रि
॥ १७ ॥ हरिं च हरिणाक्षं च हरिनाथं हरिप्रिय
हलायुधसहायं च तं वंदे हनुमत्पतिम् ॥ १८

हरिनामकृता माला पवित्रा पापनाशिनी । बलिरा-
जेंद्रेण चोक्ता कंठे धार्या प्रयत्नतः ॥ १९ ॥ इति
बलिराजेंद्रेणोक्तं हरिनाममालास्तोत्रं संपूर्णम् ॥

## २९. शालग्रामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशालग्रामस्तोत्रमंत्रस्य
श्रीभगवानृषिः । नारायणो देवता । अनुष्टुप् छंदः ।
श्रीशालग्रामस्तोत्रमंत्रजपे विनियोगः । युधिष्ठिर
उवाच । श्रीदेवदेव देवेश देवतार्चनमुत्तमम् । तत्सर्वं
श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम ॥ १ ॥ श्रीभग-
वानुवाच । गंडक्यां चोत्तरे तीरे गिरिराजस्य
दक्षिणे । दशयोजनविस्तीर्णा महाक्षेत्रवसुंधरा ॥२॥
शालग्रामो भवेद्देवो देवी द्वारावती भवेत् । उभयोः
संगमो यत्र मुक्तिस्तत्र न संशयः ॥ ३ ॥ शाल-
ग्रामशिला यत्र यत्र द्वारावती शिला । उभयोः
संगमो यत्र मुक्तिस्तत्र न संशयः ॥ ४ ॥ आज-
न्मकृतपापानां प्रायश्चित्तं य इच्छति । शालग्राम-
शिलावारि पापहारि पिबेत्तु सः ॥ ५ ॥ अकालमृ-
त्युहरणं सर्वव्याधिविनाशनम् । विष्णोः पादोदकं

पीत्वा शिरसा धारयाम्यहम् ॥ ६ ॥ शंख
स्थितं तोयं भ्रामितं केशवोपरि । अंगलग्नं मनुष्य
ब्रह्महत्यादिकं दहेत् ॥ ७ ॥ स्नानोदकं पिबे
चक्रांकितशिलोद्भवम् । प्रक्षालयति तत्तोयं
हत्यां व्यपोहति ॥ ८ ॥ अग्निष्टोमसहस्राणि
पेयशतानि च । सम्यक् फलमवाप्नोति विष्णोर्नै
भक्षणात् ॥ ९ ॥ नैवेद्ययुक्तां तुलसीं च मि
विशेषतः पादजलेन विष्णोः । योऽश्नाति
पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ १
खंडिता स्फुटिता भिन्ना अग्निदग्धा तथैव च
शालग्रामशिला यत्र तत्र दोषो न विद्यते ॥ १
न मंत्रः पूजनं नैव न तीर्थं न च भावना ।
स्तुतिर्नोपचारश्च शालग्रामशिलार्चने ॥ १२
ब्रह्महत्यादिकं पापं मनोवाक्कायसंभवम् ।
नश्यति तत्सर्वं शालग्रामशिलार्चनात् ॥ १३
नानावर्णमयं चैव नानाभोगेन वेष्टितम् ।
वरप्रसादेन लक्ष्मीकांतं वदाम्यहम् ॥ १४
नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा ।

वरप्रसादेन लक्ष्मीकांतं वदाम्यहम् ॥ १५ ॥ कृष्णे
शिलातले यत्र सूक्ष्मं चक्रं सुदृश्यते । सौभाग्यं
संततिं धत्ते सर्वसौख्यं ददाति च ॥ १६ ॥
वासुदेवस्य चिह्नानि दृष्ट्वा पापैः प्रमुच्यते । श्री-
धरः सुकरे वामे हरिद्वर्णस्तु दृश्यते ॥ १७ ॥
वाराहरूपिणं देवं कूर्मांगैरपि चिह्नितम् । गो-
पदं तत्र दृश्येत वाराहं वामनं तथा ॥ १८ ॥
पीतवर्णस्तु देवानां रक्तवर्णं भयावहम् । नार-
सिंहो भवेद्देवो मोक्षदं च प्रकीर्तितम् ॥ १९ ॥
शंखचक्रगदाकूर्माः शंखो यत्र प्रदृश्यते । शंखवर्णस्य
देवानां वामे देवस्य लक्षणम् ॥ २० ॥ दामोदरं
तथा स्थूलं मध्ये चक्रं प्रतिष्ठितम् । पूर्णद्वारेण
संकीर्णा पीतरेखा च दृश्यते ॥ २१ ॥ छत्राकारे
भवेद्राज्यं वर्तुले च महाश्रियः । चपटे च महा-
दुःखं शूलाग्रे तु रणं ध्रुवम् ॥ २२ ॥ ललाटे
शेषभोगस्तु शिरोपरि सुकांचनम् । चक्रकांचनव-
र्णानां वामदेवस्य लक्षणम् ॥ २३ ॥ वामपार्श्वे च

वै चक्रे कृष्णवर्णस्तु पिंगलम् । लक्ष्मीनृसिंहदेव
पृथग्वर्णस्तु दृश्यते ॥ २४ ॥ लंबोष्ठे च दा
स्यात्पिंगले हानिरेव च । लग्नचक्रे भवेद्व्याधिर्वि
मरणं ध्रुवम् ॥ २५ ॥ पादोदकं च निर्माल्यं मस्
धारयेत्सदा । विष्णोर्दृष्टं भक्षितव्यं तुलसी
मिश्रितम् ॥ २६ ॥ कल्पकोटिसहस्राणि वै
वसते सदा । शालग्रामशिलाबिंदुर्हत्याकोटिवि
शनः ॥ २७ ॥ तस्मात्संपूजयेद्ध्यात्वा पूजितं च
सर्वदा । शालग्रामशिलास्तोत्रं यः पठेच्च द्विजो
॥ २८ ॥ स गच्छेत्परमं स्थानं यत्र लोके
हरिः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छ
॥ २९ ॥ दशावतारा देवानां पृथग्वर्णस्तु दृश्य
ईप्सितं लभते राज्यं विष्णुपूजामनुक्रमात् ॥ ३०
कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः । 
सर्वा नाशमायांति विष्णुनैवेद्यभक्षणात् ॥ ३१
विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम्
तस्मादष्टगुणं पापं भूमौ बिंदुनिपातनात् ॥ ३२
इति शालग्रामस्तोत्रं संपूर्णम् ॥

## २६. अच्युताष्टकम् ।

श्रीगणेशाय नमः ॥ अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् । हंसं नारायणं चैवमेतन्नामाष्टकं पठेत् ॥ १॥ त्रिसंध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति । शत्रुसैन्यं क्षयं याति दुःस्वप्नः सुस्वप्नो भवेत् ॥ २ ॥ गंगायां मरणं चैव दृढा भक्तिस्तु केशवे । ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः ॥ ३ ॥ इति श्रीवामनपुराणे विष्णोर्नामाष्टकस्तोत्रं संपूर्णम् ॥

## २७. विष्णुपादादिकेशांतवर्णनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं नीलाद्रेस्तुंगशृंगस्थितमिव रजनीनाथबिम्बं विभाति । पायान्नः पांचजन्यः स सकलदितिजत्रासनैः पूरयन्स्वैर्निध्वानैर्नीरदौघध्वनिपरिभवदैरंवरं कंबुराजः ॥ १ ॥ आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं ध्वांतस्यैकांतमंतं यदपि च परमं सर्वधाम्नां च धाम । चक्रं

---

१ अस्य टीका काव्यमालाया द्वीतीयगुच्छके द्रष्टव्या ।

तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं
विश्ववंद्यं वितरतु विपुलं शर्म घर्मांशुशोभम् ॥
अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मात
रस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुता
सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविस्फार
संयत्कल्पांतसिंधौ शरसलिलघटावार्मुचः कार्मु
॥ ३ ॥ जीमूतश्यामभासा मुहुरपि भगवद्बा
मोह्यंती युद्धेषूद्धूयमाना झटिति तडिदिवाल
यस्य मूर्तिः । सोऽसिस्त्रासाकुलाक्षत्रिदशरिपु
शोणितास्वाददृप्तो नित्यानंदाय भूयान्मधुमथन
नंदको नंदको नः ॥ ४ ॥ कम्राकारा मुरारेः क
मलतलेनानुरागाद्गृहीता सम्यग्वृत्ता स्थिताग्रे स
न सहते दर्शनं या परेषाम् । राजंती दैत्यजीव
वमदमुदिता लोहितालेपनार्द्रा कामं दीप्तांशु
प्रदिशतु दयितेवास्य कौमोदकी नः ॥ ५ ॥
विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो
संचिंत्यैव. सद्यः स्वयमुरगवधूवर्गगर्भाः (तॉ
चंचच्चंडोरुतुंडत्रुटितफणिवसारक्तपंकांकितास्यं

छंदोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥ ६ ॥ विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता सोऽनंतः सर्पभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः । पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहंता सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥ ७ ॥ वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः । कुंदेंदुस्वच्छमंदस्मितमधुरमुखांभोरुहां सुंदरांगीं वंदे वंद्यामशेषैरपि मुरभिदुरोमंदिरामिंदिरां ताम् ॥ ८ ॥ या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो धत्ते या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् । धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥ ९ ॥ येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गैर्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः । नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः पद्माक्षस्यांघ्रिपद्मद्वयतलनि-

लया: पांसव: पापपंकम् ॥ १० ॥ रेखा ले
भिर्वंद्याश्चरणतलगताश्चक्रमत्स्यादिरूपा: स्नि
सूक्ष्मा: सुजाता मृदुललिततरक्षौमसूत्रायमाणा:
दद्युर्नो मंगलानि भ्रमरभरजुषा कोमलेनाब्जजा
क्रमेणाम्रेड्यमाना: किसलयमृदुना पाणिना चक्र
॥ ११ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिला
दंडायमानादाश्च्योतंती बभासे सुरसरिदमला
यंतीव कांता । भूमिष्ठो यस्तथान्यो भुवनगृह
स्तंभशोभां दधान: पातामेतौ पयोजोदरललित
पंकजाक्षस्य पादौ ॥ १२ ॥ आक्रामद्भ्यां त्रि
कीमसुरसुरपती तत्क्षणादेव नीतौ याभ्यां वैरोच
न्द्रौ युगपदपि विपत्संपदोरेकधाम । ताभ्यां ता
दराभ्यां मुहुरहमजितस्यांचिताभ्यामुभाभ्यां प्रा
श्वर्यप्रदाभ्यां प्रणतिमुपगत: पादपंकेरुहाभ्याम्॥१
येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्र
साहस्री चापि संख्या प्रकटमभिहिता सौंद
वेदेषु येषाम् । व्याप्ता विश्वंभरा यैरतिपूरि
शततनोर्विश्वमूर्तेर्विराजो विष्णोस्तेभ्यो महद्भ्यो

सततमपि शमोऽस्त्वंघ्रिपंकेरुहेभ्यः ॥ १४ ॥
विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते
या राजीवस्येव रम्या हिमजलकणिकालंकृताग्रा
दलाली । अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थ-
नीयानि सेयं दद्यादाद्यानवद्या ततिरतिरुचिरा मंग-
लान्यंगुलीनाम् ॥ १५ ॥ यस्यां दृष्ट्वामलायां प्रति-
कृतिममराः स्वां भवंत्यानमंतः सेंद्राः सांद्रीकृतेर्ष्याः
स्वपरसुरकुलाशंकयातंकवंतः । सा सद्यः सातिरेकां
सकलसुखकरीं संपदं साधयेन्नश्चंचच्चार्वंशुचक्रा चर-
णनलिनयोश्चक्रपाणेर्नखाली ॥ १६ ॥ पादांभोज-
न्मसेवासमवनतसुरव्रातभास्वत्किरीटप्रत्युप्तोच्चावचा
श्मप्रवरकरगणैश्चित्रितं यद्विभाति । नम्रांगाणां
हरेर्नो हरिदुपलमहाकूर्मसौंदर्यहारिच्छायं श्रेयः
प्रदायि प्रपदयुगमिदं प्रापयेत्पापमंतम् ॥ १७ ॥
श्रीमत्यौ चारुवृत्ते करपरिमलनानंदहृष्टे रमायाः
सौंदर्याढ्येंद्रनीलोपलरचितमहादंडयोः कांतिचौरे ।
सूरींद्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसंघे
जंघे नारायणीये मुहुरपि जयतामस्मदंहो हरंत्यौ

॥ १८ ॥ सम्यक् साह्यं निधातुं सममपि सुद
जंघयोः खिन्नयोर्ये भारीभूतोरुदंडद्वयभरणकृ धु
भभावं भजेते । चित्तादर्शे निधातुं महितमिव ल
ते समुद्गायमाने वृत्ताकारे विधत्तां हृदि मुदम भ
स्यानिशं जानुनी नः ॥ १९ ॥ देवो भीतिं वि त
सपदि विदधतौ कैटभाख्यं मधुं चावारोप्यारूढ नि
वधिजलधि ययोरेव दैत्यौ जघान । वृत्तावन्त वर्ण
तुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीलावूरू काम
हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम्॥२ य
पीतेन द्योतते यच्चतुरपरिहितेनांबरेणात्युदारं सित
लंकारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः। हा
त्पातित्यदाम्नो जघनमतिघनादेनसो माननीयं हा
त्येनैव चेतोविषयमवतरत्पातु पीतांबरस्य ॥ २ धौ
यस्या दाम्नात्रिधाम्नो जघनकलितया भ्रा ला
यथाब्धेर्मध्यस्थो मंदराद्रिर्भुजगपतिमहाभोगसं तो
मध्यः । कांची सा कांचनाभा मणिवरकिरणै रै
सद्भिः प्रदीप्ता कल्पां कल्याणदात्री मम मतिम ा
कम्ररूपां करोतु ॥ २२ ॥ उन्नम्रं कम्रमुच्चैरर्पा २

द्भूद्यत्र पत्रैर्विचित्रैः पूर्वं गीर्वाणपूज्यं कमलज-
धुपस्यास्पदं तत्पयोजम्। तस्मिन्नीलाश्मनीलैस्त-
लरुचिजलैः पूरिते केलिबुद्ध्या नालीकाक्षस्य
ाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥ २३ ॥
ातालं यस्य नालं वलयमपि दिशां पत्रपंक्तिं नगें-
ान्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां
वर्णशैलम्। भूयाद्भायत्स्वयंभूमधुकरभवनं भूमयं
ामदं नो नालीकं नाभिपद्माकरभवमुरु तन्नाग-
य्यस्य शौरेः ॥ २४ ॥ कांत्यंभःपूरपूर्णे लसद्-
सितवलीभंगभास्वत्तरंगे गंभीराकारनाभीचतुरतर-
हावर्तशोभिन्युदारे। क्रीडत्वानद्धहेमोदरनलिन-
हावाडवाग्निप्रभाढ्ये कामं दामोदरीयोदरसलिल-
धौ चित्तमत्स्यश्चिरं नः ॥ २५ ॥ नाभीनालीक-
लादधिकपरिमलोन्मोहितानामलीनां मालानीलेव
ंती स्फुरति रुचिमती वक्षपद्मोन्मुखी या। रम्यो
रोमराजिर्महितरुचिमती मध्यभागस्यविष्णोश्चित्त-
ा मा विरंसीश्चिरतरमुचितां साधयंती श्रियं नः
॥ २६ ॥ आदौ कल्पस्य यस्मात्प्रभवति विततं

विश्वमेतद्विकल्पैः कल्पांते यस्य चांतः प्रवि
सकलं स्थावरं जंगमं च । अत्यंताचिंत्यमूर्तेश्चि
मजितस्यांतरिक्षस्वरूपे तस्मिन्नस्माकमंतःकर
मुदा क्रीडतात्क्रोडभागे ॥ २७ ॥ संस्तीर्णं
भांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं श्रीवत्सो
फुल्लप्रातिवनवनमालांशुराजद्भुजांतम् । वक्षः
कांतं मधुकरनिकरश्यामलं शार्ङ्गपाणेः संसा
श्रमार्तैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥ २८॥
यो नितांतं विदधदिव गलं कालिमा काल
रिंदोर्बिंबं यथांको मधुप इव तरोर्मंजरीं राजते
श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्री
श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स
श्रियं नः ॥ २९ ॥ संभूयांभोधिमध्यात्सपदि
जया यः श्रिया संनिधत्ते नीले नारायणोर
गगनतले हारतारोपसेव्ये । आशाः सर्वाः प्र
विदधदपि दधच्चात्मभासान्यतेजांस्याश्चर्यस्या
द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै॥३०
वायावानुकूल्यात्सरति मणिरुचा भासमाना

साकं साकंपमंसे वसति विदधती वासुभद्रं सुभद्रम् । सारं सारंगसंघैर्मुखरितकुसुमा मेचकांता च कांता माला मालालितास्माद्विरमतु सुखैर्योजयंती जयंती ॥ ३१ ॥ हारस्योरुप्रभाभिः प्रतिवनवनमालांशुभिः प्रांशुभिर्यच्छ्रीभिश्चाप्यंगदानां शबलितरुचिभिर्निष्कभाभिश्च भाति । बाहुल्येनैव बद्धांजलिपुटमजितस्याभियाचामहे तद्बुधार्तिं बाधतां नो बहुविहितकरीं बंधुरं बाहुमूलम् ॥ ३२ ॥ विश्वत्राणैकदीक्षास्तदनुगुणगणक्षत्रनिर्माणदक्षाः कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणामद्भुतानाम् । शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशंखौ सहस्रं बिभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो मोहहानिम् ॥ ३३ ॥ कंठाकल्पोद्गतैर्यः कनकमयलसत्कुंडलोत्थैरुदारैरुद्योतैः कौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति । कंठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे वैकुंठीयेऽत्र कंठे वसतु मम मतिः कुंठभावं विहाय ॥ ३४ ॥ पद्मानंदप्रदाता परिलसदरुणश्रीपरीताग्रभागः काले काले च कंबुप्रवरशशधरापूरणे यः प्रवीणः । वक्त्रा-

कार्शां तरस्थस्तिरयति नितरां दंततारौघशोभां श्रे
तुर्दंतवासो द्युमणिरघतमोनाशनायास्त्वसौ नः प्र
॥३५॥ नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रदि
क्षमाया वक्त्रेंदोरंतराले कृतवसतिरिवाभाति नै
राजिः । लक्ष्मीकांतस्य कांताकृतिरतिविलसद्अ
मुक्ताफलश्रीर्दंताली संततं सा नतिनुतिनिरतमा
तादक्षता नः ॥ ३६ ॥ ब्रह्मन्ब्रह्मण्यलक्ष
मतिमपि कुरुषे देव संभावये त्वां शंभो त्वां
त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं क्षम
इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य वि
प्रसन्नस्यास्येंदोरास्रवंती वरवचनसुधाह्लादयेन्पा
नः ॥ ३७ ॥ कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहच
लप्रोतदीप्यन्माणिक्यश्रीप्रतानैः परिमिलितमहि
मलं कोमलं यत् । प्रोद्यत्सूर्यांशुराजन्मरकत्य
राकारचोरं मुरारेर्गाढामागामिनीं नो गमयतु नः
गंडयोर्मंडलं तत् ॥ ३८ ॥ वक्त्रांभोजे ल
मुहुरधरमणिं पक्वबिंबाभिरामं दृष्ट्वा दष्टुं टे
स्फुटमवतरतस्तुंडदंडायते नः। घोणः शोणी

श्रवणयुगलसत्कुंडलोग्रैर्मुरारेः प्राणाख्यस्यानिलस्य
प्रसरणसरणिः प्राणदानाय नः स्तात् ॥ ३९ ॥
दिक्कालौ वेदयंतौ जगति मुहुरिमौ संचरंतौ रवींदू
त्रैलोक्यालोकदीपावभिदधति ययोरेवरूपं मुनींद्राः ।
अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे पाता
माताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥४०॥
लक्ष्माकारालकालिस्फुरदलिकशशांकार्धसंदर्शमीलन्ने
त्रांभोजप्रबोधोत्सुकनिभृततरालीनभृंगच्छदाभे । ल-
क्ष्मीनाथस्य लक्षीकृतविबुधगणापांगबाणासनार्धच्छा
ये नो भूतिभूरिप्रसवकुशलते भ्रूलते पालयेताम् ४१॥
पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं येने-
षच्चालितेन स्वपदनियमिताः सासुरा देवसंघाः ।
त्यल्ललाटरंगे रजनिकरतनोरर्धखंडावदाते काल-
व्यालद्वयं वा विलसति समया बालिका मातरं
नः ॥ ४२ ॥ रूक्षस्मारेक्षुचापच्युतशरनिकरक्षी-
णलक्ष्मीकटाक्षप्रोत्फुल्लत्पद्ममालाविलसितमहितस्फा-
टिकेशानालिंगम् । भूयाद्भूयो विभूत्यै मम भुवनपते-

भ्रूलताद्वंद्वमध्यादुत्थं तत्पुंड्रमूर्ध्वं जनिमरण
डनं मंडनं च ॥ ४३ ॥ पीठीभूतालकांते कृत
महादेवलिंगप्रतिष्ठे लालाटे नाट्यरंगे विकट
कैटभारेश्चिराय । प्रोद्घाट्यैवात्मतंद्रीप्रकट
प्रस्फुरंतीं स्फुटांगं पट्टीयं भावनाख्यां चटु
नटी नाटिकां नाटयेन्नः ॥ ४४ ॥ मालालि
धाम्नः कुवलयकलिता श्रीपतेः कुंतलाली का
रुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु । वि
याति वक्रं सकलशशिकलाभ्रांतिलोल
लोकैरालोच्यते या प्रदिशतु सकलैः साखिलं
नः ॥ ४५ ॥ सुप्ताकाराः प्रसुप्ते भगवति
रप्यदृष्टस्वरूपा व्याप्तव्योमांतरालास्तरल
रंजिताः स्पष्टभासः । देहच्छायोद्गमाभा
गुरुप्लोषरोषाग्निधूम्याः केशाः केशिद्विषो नो
विपुलक्लेशपाशप्रणाशम् ॥ ४६ ॥ यत्र प्रत्यु
वरपरिलसद्भूरिरोचिःप्रतानस्फूर्त्या मूर्तिर्मुरारे
शतचितव्योमवद्दुर्निरीक्ष्या । कुर्वत्पारेपयोधिं
दकृत महाभास्वदौर्वाग्निशंकां शश्वन्नः

द्यात्कालिकलुषतमःपाटनं तत्किरीटम् ॥ ४७ ॥
त्वा भ्रांत्वा यदंतस्त्रिभुवनगुरुरप्यब्दकोटीरनेका
नांतं समर्थो भ्रमर इव पुनर्नाभिनालीकना
त् । उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्स-
ं देहांभोधिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो
॥ ४८ ॥ मत्स्यः कूर्मो वराहो नरहरिणप
र्वामनो जामदग्न्यः काकुत्स्थः कंसघाती मनसि-
विजयी यश्च कल्की भविष्यन् । विष्णोरंशाव-
रा भुवनहितकरा धर्मसंस्थापनार्थाः पायासुर्मां त
गुरुतरकरुणाभारखिन्नाशया ये ॥ ४९ ॥
माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्ष-
णाः स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो
वादाः ॥ नित्यानंदं स्वसंविन्निरवधिममृतं स्वांत-
तबिंबच्छायापत्त्यापि नित्यं सुखयति यमिनो
दव्यान्महो नः ॥ ५० ॥ आ पादादा च
र्णो वपुरिदमनघं वैष्णवं यः स चित्ते धत्ते
धीं निरस्ताखिलकलिकलुषे संततांतः प्रमोदः ।
ः जिह्वाकृशानौ हरिचरितहविः स्तोत्रमंत्रानुपाठै-

स्तत्पादांभोरुहाभ्यां सततमपि नमस्कुर्महे नि
भ्याम् ॥ ५१ ॥ इति भगवत्पादश्रीशंकरा
कृतं विष्णुपादादिकेशान्तवर्णनस्तोत्रं समाप्तम्

२८. श्रीविष्णुमहिम्नः स्तोत्रप्रारम्भः

श्रीगणेशाय नमः ॥ महिम्नस्ते पारं वि
फणीन्द्रप्रभृतयो विदुर्नाद्याप्यज्ञश्चलमतिरहं
नु कथम् । विजानीयामद्धा नलिननयन
वचसो विशुद्ध्यै वक्ष्यामीषदपि तु तथापि
तितः ॥ १ ॥ यदाहुर्ब्रह्मैके पुरुषमितरे
परेऽपरे बुद्धं चान्ये शिवमपि च धाता
तथा शक्तिं केचिद्गणपतिमुतार्कं च सुधियो
वै भेदात्त्वमसि तदशेषं मम मतिः ॥ २
पादांभस्ते शिरसि धृतवानादरयुतं तथा
श्चासौ तव तनुजतेजोमयतनुः । दिनेशं
तव नयनमूचुस्तु निगमास्त्वदन्यः को ध्येय
किल देवो वद विभो ॥ ३ ॥ कचिन्मत्स्य
क्वचिदपि वराहो नरहरिः क्वचित्खर्वो राम

रथसुतो नंदतनयः । क्वचिद्बुद्धः कल्किर्विहरासि कुभारापहृतये स्वतंत्रोऽजो नित्यो विभुरपि तवाक्रीडनमिदम् ॥ ४ ॥ हृताम्नायेनोक्तं स्तवनवरमाकर्ण्य विधिना द्रुतं मात्स्यं धृत्वा वपुरजर शंखासुरमथो । क्षयं नीत्वा मृत्योर्निगमगणमुद्धृत्य जलधेरशेषं संगुप्तं जगदपि च वेदैकशरणम् ॥ ५ ॥ निमज्जंते वार्धौ नगवरमुपालोक्य सहसा हितार्थे देवानां कमठवपुषाऽविश्य गहनम् । पयोराशिं पृष्ठे दमजित सलीलं धृतवतो जगद्धातुस्तेऽभूत्किमु सुलभभाराय गिरिकः ॥ ६ ॥ हिरण्याक्षः क्षोणीमविशदसुरो नक्रनिलयं समादायामर्त्यैः करुलजमुखैरंबरगतैः । स्तुतेनानंतात्मन्नचिरमवभाति स विधृता त्वया दंष्ट्राग्रेऽसाववनिरखिला कंदुक इव ॥७॥ हरिः क्वास्तीत्युक्ते दनुजपतिनाऽऽपूर्य निखिलं जगन्नादैः स्तंभान्नरहरिशरीरेण करजैः । समुत्पत्याशूरावसुरवरमादारितवतस्तवाख्याता भूमन्किमु जगति नो सर्वगतता ॥ ८ ॥ विलोक्याजं द्वारी कपटलघुकायं सुररिपुर्निषिद्धोपि प्रादादसुरगुरुणा-

त्मीयमखिलम् । प्रसन्नस्तद्भक्त्या त्यजसि [illegible]
नाद्यापि भवनं बलेर्भक्ताधीन्यं तव विदितमेसद
मरपते ॥ ९ ॥ समाधावासक्तं नृपतितनयैर्वी[illegible]
पितरं हतं बाणैरोषाद्गुरुतरमुपादाय परशुम् । नि[illegible]
क्षत्रं विष्णो क्षितितलमशेषं कृतवतोऽसकृ[illegible]
भूभारोद्धरणपटुता ते न विदिता ॥ १० ॥ स[illegible]
राध्योमेशं त्रिभुवनमिदं वासवमुखं वशे चक्रे च[illegible]
न्नगणयदनीशं जगदिदम् । गतोऽसौ लंकेश[illegible]
चिरमथ ते बाणविषयं न केनाप्तं त्वत्तः फलमवि[illegible]
यस्यासुररिपो ॥ ११ ॥ क्वचिद्दिव्यं शौर्यं क्व[illegible]
दपि रणे कापुरुषता क्वचिद्गीताज्ञानं क्वचि[illegible]
परस्त्रीविहरणम् । क्वचिन्मृत्स्नाशित्वं क्वचिदपि [illegible]
वैकुंठविभवश्चारित्रं ते नूनं शरणद विमोहाय [illegible]
याम् ॥ १२ ॥ न हिंस्यादित्येतद्ध्रुवमवितथं वा[illegible]
मबुधैरथाग्नीषोमीयं पशुमिति तु विप्रैर्निगदित[illegible]
तवैतन्नास्थानेऽसुरगणविमोहाय गदतः समृद्धि[illegible]
चानां नयकर हि दुःखाय जगतः ॥ १३ [illegible]
विभागे वर्णानां निगमनिचये चावनितले वि[illegible]

जातो द्विजवरगृहे शंभलपुरे । समारुह्याश्वं
सदसिकरो म्लेच्छानिकरान्निहंतास्युन्मत्तान्किल
लियुगांते युगपते ॥ १४ ॥ गभीरे कासारे जल-
खराकृष्टचरणो रणेऽशक्तो मज्जन्भयद जलेऽचिं-
यदसौ । यदा नागेंद्रस्त्वां सपदि पदपाशादपगतो
तः स्वर्गी स्थानं भवति विपदां ते किमु जनः॥१५॥
तैः पृष्टो वेधा प्रतिवचनदानेऽप्रभुरसावथात्मन्या-
नं शरणमगमस्त्वां त्रिजगताम् । ततस्तेऽस्तातंका
सुरथ मुदं हंसवपुषा त्वया ते सार्वज्ञं प्रथितममरे-
ह किमु नो ॥ १६ ॥ समाविद्धो मातुर्वचन-
शिखैराशु विपिनं तपश्चक्रे गत्वा तव परम
षाय परमम् । ध्रुवो लेभे दिव्यं पदमचलमल्पे-
पि वयसि किमस्त्यस्मिल्लोके त्वयि वरद तुष्टे
धिगम् ॥ १७ ॥ वृकाद्भीतस्तूर्णं स्वजनभय-
स्त्वां पशुपतिर्भ्रमँल्लोकान्सर्वाञ्छरणमुपयातोऽथ
जः । स्वयं भस्मीभूतस्तव वचनभंगोद्गतमती
शाहो माया तव दुरनुमेयाऽखिलजनैः ॥ १८ ॥
दैत्यैर्दृष्ट्वाऽमृतघटमजय्यैस्तु नयतः कटाक्षैः

संमोहं युवतिवरवेषेण दिविजान् । समग्रं तास
सुभग सुरपूगाय ददतः समस्यापि प्रायस्तव कृता
हि भृत्येष्वभिरतिः ॥ १९ ॥ समाकृष्टा दुष्टैः प
तनयाऽलब्धशरणा सभायां सर्वात्मंस्तव शरणं र
रूपगता । समक्षं सर्वेषामभवदचिरं चीरनिचयो
स्मृतेस्ते साफल्यं नयनविषयं नो किमु प्रसून
॥ २० ॥ वदंत्येके स्थानं तव वरद वैकुंठमपरे स्तूप
लोकं लोकं फणिनिलयपातालमितरे । तथैक
क्षीरोदं हृदयनलिनं चापि तु सतां न मन्ये वासो
स्थानं त्वहमिह च यत्रासि न विभो ॥ प्रोति
शिवोहं रुद्राणामहममरराजो दिविषदां सूर्यान्
व्यासोहं सुरवर समुद्रोस्मि सरसाम् । गोकुले
यक्षाणामिति तव वचो मंदमतये न जाने जलरु
क्षणांत ननु यन्नासि भगवन् ॥ २२ ॥ शिवो तास
नेत्रे शशिदिनकरावंबरमुरो दिशः श्रोत्रे मयस
निगमनिकरस्ते कटिरिला । अकूपारो बस्ति मनो
मपि पातालमिति वै स्वरूपं तेऽज्ञात्वा नृतनु चिद्ध
गंति कुधियः ॥ २३ ॥ शरीरं वैकुंठं हृदयं दास्व

[illegible]लासमदनं मनोवृत्तिस्ताक्ष्यों मतिरियमथो साग[illegible]-
[illegible]सुता । विहारस्तेऽवस्थात्रितयमसवः पार्षदगणो
[illegible] पश्यत्यज्ञा त्वामिह बहिरहो याति जनता
[illegible] २४ ॥ सुघोरं कांतारं विशति च तडागं सुगहनं
[illegible]थोत्तुंगं शृंगं सपदि च समारोहति गिरेः ।
[illegible]सूनार्थं चेतोंबुजममलमेकं त्वयि विभो समर्प्या-
[illegible]स्तूर्णं बत न च सुखं विंदति जनः ॥ २५ ॥
[illegible]तैकांतावासा विगतनिखिलाशाः शमपरा जित-
[illegible]ासोच्छ्वासास्त्रुटितभवपाशाः सुयमिनः । परं
[illegible]योतिः पश्यन्त्यनघ यदि पश्यंतु मम तु श्रियाश्लिष्टं
[illegible]यान्नयनाविषयं ते किल वपुः ॥ २६ ॥ कदा
[illegible]गोत्तुंगामलतरतरंगाच्छपुलिने वसन्नाशापाशाद्-
[illegible]लखलदाशादपगतः । अये लक्ष्मीकांतांबुजनयन
[illegible]तामरपते प्रसीदेत्याजल्पन्नमरवर नेष्यामि
[illegible]मयम् ॥ २७ ॥ कदा शृंगैः स्फीते मुनिगणपरीते
[illegible]मनगे द्रुमावीते शीते सुरमधुरगीते प्रतिवसन् ।
[illegible]चिद्ध्यानासक्तो विषयसुविरक्तो भवहरं स्मरंस्ते
[illegible]दाब्जं जनिहर समेष्यामि विलयम् ॥ २८ ॥

सुधापानं ज्ञानं न च विपुलदानं न निगमो न
नो योगो न च निखिलभोगोपरमणम् ।
नो नो तीर्थं व्रतमिह न चोग्रं त्वयि तपो
भक्तिं तेऽलं भवभयविनाशाय मधुहन् ॥ २
नमः सर्वेष्टाय श्रुतिशिखरदृष्टाय च नमो नम
श्लिष्टाय त्रिभुवननिविष्टाय च नमः । नमो
ष्टाय प्रणवपरिमृष्टाय च नमो नमस्ते सर्वात्म
रपि पुनस्ते मम नमः ॥ ३० ॥ कणान्कश्चि
णननिपुणस्तूर्णमवनेस्तथाशेषान्पांसूनमित कल
पि तु जनः । नभःपिंडीकुर्यादचिरमपि चेच्चर्म
तथापीशासौ ते कलयितुमलं नाखिलगुणान् ॥
क्व माहात्म्यं सीमोज्झितमविषयं वेदवचसां सदा
ते मे चेतः क्व च विविधतापाहतमिदम् ।
यत्किंचिद्वदितमथ बाल्ये न तु गुरो गृहाणैतत्
र्पितमिह न हेयं हि महताम् ॥ ३२ ॥ इति
स्तवनं सुमनोहरं परमहंसजनेन समीरितम् ।
सुन्दरसारपदास्पदं तदिदमस्तु हरेरनिशं मुदे
गदारथांगांबुजकंबुधारिणो रमासमाश्लिष्टतनो

तु नः । विलेशयाधीशशरीरशायिनः शिवं स्तवोऽजस्रमयं परं हरेः ॥ ३४ ॥ पठेदिमं यस्तु नरः परं स्तवं समाहितोघौघघनप्रभंजनम् । स विंदतेऽत्राखिलभोगसंपदो महीयते विष्णुपदे ततो ध्रुवम् ॥ ३५ ॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीविष्णुमाहिम्नः स्तोत्रं संपूर्णम् ॥

## २९. श्रीहरिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जगज्जालपालं कचत्कंठमालं शरच्चंद्रभालं महादैत्यकालम् । नभोनीलकायं दुरावारमायं सुपद्मासहायं भजेऽहं भजेऽहम् ॥ १ ॥ सदांभोधिवासं गलत्पुष्पहासं जगत्संनिवासं शतादित्यभासम् । गदाचक्रशस्त्रं लसत्पीतवस्त्रं हसच्चारुवक्त्रं भजे० ॥ २ ॥ रमाकंठहारं श्रुतिव्रातसारं जलांतर्विहारं धराभारहारम् । चिदानंदरूपं मनोज्ञस्वरूपं धृतानेकरूपं भजे० ॥ ३ ॥ जराजन्महीनं परानंदपीनं समाधानलीनं सदैवानवीनम् । जगज्जन्महेतुं सुरानीककेतुं त्रिलोकैकसेतुं भजे० ॥ ४ ॥

कृताम्नायगानं खगाधीशयानं विमुक्तेर्निदानं हरा
तिमानम् । स्वभक्तानुकूलं जगद्वृक्षमूलं निरस्ता
शूलं भजे० ॥ ५ ॥ समस्तामरेशं द्विरेफाभके
जगद्विंबलेशं हृदाकाशदेशम् । सदा दिव्यं
विमुक्ताखिलेहं सुवैकुंठगेहं भजे० ॥ ६ ॥ सुरालं
बलिष्ठं त्रिलोकीवरिष्ठं गुरूणां गरिष्ठं स्वरूपैकनिष्ठं
सदा युद्धधीरं महावीरवीरं भवांभोधितीरं भ
॥ ७ ॥ रमावामभागं तलानग्रनागं कृताधीनय
गतारागरागम् । मुनींद्रैः सुगीतं सुरैः संप
गुणौघैरतीतं भजे० ॥ ८ ॥ इदं यस्तु नित्यं स
धाय चित्तं पठेदष्टकं कण्ठहारं मुरारेः । स विष्
विशोकं ध्रुवं याति लोकं जराजन्मशोकं पुनर्वि
नो ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविर
श्रीहरिस्तोत्रं संपूर्णम् ॥

## ३०. श्रीहरिनामाष्टकम् ।

श्रीगणेशाय नमः ॥ श्रीकेशवाच्युत मुकुंद रथांग
गोविंद माधव जनार्दन दानवारे । नारायणाम

जगन्निवास जिह्वे जपेति सततं मधुराक्षराणि ॥ १ ॥ श्रीदेवदेव मधुसूदन शार्ङ्गपाणे दामोदरावनिकेतन कैटभारे । विश्वंभराभरणभूषित भूमिपाल जिह्वे० ॥ २ ॥ श्रीपद्मलोचन गदाधर पद्मनाभ पद्मेश पद्मपद पावन पद्मपाणे । पीतांबराबरुचे रुचिरावतार जिह्वे० ॥ ३ ॥ श्रीकांत कौस्तुभधरार्तिहराब्जपाणे विष्णो त्रिविक्रम महीधर धर्मसेतो । वैकुंठवास वसुधाधिप वासुदेव जिह्वे० ॥ ४ ॥ श्रीनारसिंह नरकांतक कांतमूर्ते लक्ष्मीपते गरुडवाहन शेषशायिन् । केशिप्रणाशन सुकेश किरीटमौले जिह्वे० ॥ ५ ॥ श्रीवत्सलांछन सुरर्षभ शंखपाणे कल्पांतवारिधिविहार हरे मुरारे । यज्ञेश यज्ञमय यज्ञभुगादिदेव जिह्वे० ॥ ६ ॥ श्रीराम रावणरिपो रघुवंशकेतो सीतापते दशरथात्मज राजसिंह । सुग्रीवमित्र मृगवेधन चापपाणे जिह्वे० ॥ ७ ॥ श्रीकृष्ण वृष्णिवर यादव राधिकेश गोवर्धनोद्धरण कंसविनाश शौरे । गोपाल वेणुधर पांडुसुतैकबंधो जिह्वे० ॥ ८ ॥ इत्यष्टकं भगवतः

सततं नरो यो नामांकितं पठति नित्यमनन्यचेत
विष्णोः परं पदमुपैति पुनर्न जातु मातुः पयोध
पिबतीह सत्यम् ॥ ९ ॥ इति श्रीपरमहंसस्वा
ह्मानंदविरचितं श्रीहरिनामाष्टकं संपूर्णम् ॥

## ३१. श्रीहरिशरणाष्टकम् ।

श्रीगणेशाय नमः ॥ ध्येयं वदंति शिवमेव वि
केचिदन्ये शक्तिं गणेशमपरे तु दिवाकरं तं
रूपैस्तु तैरपि विभासि यतस्त्वमेव तस्मात्त्वमे
शरणं मम शंखपाणे ॥ १ ॥ नो सोदरो न जनु
जननी न जाया नैवात्मजो न च कुलं विपुलं
वा । संदृश्यते न किल कोऽपि सहायको
तस्मा० ॥ २ ॥ नोपासिता मदमपास्य
महांतस्तीर्थानि चास्तिकधिया नहि सेविता
देवार्चनं च विधिवन्न कृतं कदापि तस्मा० ॥
दुर्वासना मम सदा परिकर्षयंति चित्तं शरी
रोगगणा दहंति । संजीवनं च परहस्तगतं
तस्मा० ॥४ ॥ पूर्वं कृतानि दुरितानि मया तु

स्मृत्वाखिलानि हृदयं परिकंपते मे । ख्याता च ते
पतितपावनता तु यस्मात्तस्मा० ॥ ५ ॥ दुःखं
जराजननजं विविधाश्च रोगाः काकश्वसूकरजनि-
र्निरये च पातः । ते विस्मृतेः फलमिदं विततं हि
लोके तस्मा० ॥ ६ ॥ नीचोपि पापवलितोऽपि
विनिंदितोऽपि ब्रूयात्तवाहमिति यस्तु किलैकवारम् ।
तं यच्छसीश निजलोकमिति व्रतं ते तस्मा० ॥७॥
वेदेषु धर्मवचनेषु तथागमेषु रामायणेपि च
पुराणकदंबके वा । सर्वत्र सर्वविधिना गदितस्त्वमेव
तस्मा० ॥ ८ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंद-
विरचितं श्रीहरिशरणाष्टकं संपूर्णम् ॥

## ३२. श्रीदीनबंध्वष्टकम् ।

श्रीगणेशाय नमः । यस्मादिदं जगदुदेति चतुर्मुखाद्यं
यस्मिन्नवस्थितमशेषमशेषमूले । यत्रोपयाति विलयं
च समस्तमंते दृग्गोचरो भवतु मेऽद्य स दीनबंधुः
॥ १ ॥ चक्रं सहस्रकरचारु करारविंदे गुर्वी गदा
दरवरश्च विभाति यस्य । पक्षींद्रपृष्ठपरिरोपितपाद-
पद्मो दृग्गोचरो० ॥ २ ॥ येनोद्धृता वसुमती

सलिले निमग्ना नग्ना च पांडववधूः स्थगि
दुकूलैः । संमोचितो जलचरस्य मुखाद्गजेंद्रो दृग्गो
॥ ३ ॥ यस्यार्द्रदृष्टिवशतस्तु सुराः समृद्धिं को
क्षणेन दनुजा विलयं व्रजंति । भीताश्चरंति
यतोऽर्कयमानिलाद्या दृग्गो० ॥ ४ ॥ गाय
सामकुशला यमजं मखेषु ध्यायंति धीरम
यतयो विविक्ते । पश्यंति योगिपुरुषाः पुरुषं श
दृग्गो० ॥ ५ ॥ आकाररूपगुणयोगविवर्जितो
भक्तानुकंपननिमित्तगृहीतमूर्तिः । यः सर्वगो
कृतशेषशरीरशय्यो दृग्गो० ॥ ६ ॥ यस्यांघ्रिपं
मनिंद्रमुनींद्रवृंदैराराध्यते भवदवानलदाहशांत
सर्वापराधमविचिंत्य ममाखिलात्मा दृग्गो० ॥
यन्नामकीर्तनपरः श्वपचोऽपि नूनं हित्वा
कलिमलं भुवनं पुनाति । दग्ध्वा ममाघमा
करुणेक्षणेन दृग्गो० ॥ ८ ॥ दीनबंध्वष्टकं
ब्रह्मानंदेन भाषितम् । यः पठेत्प्रयतो नित्यं
विष्णुः प्रसीदति ॥ ९ ॥ इति श्रीपरमहंसस्वा
ब्रह्मानंदविरचितं श्रीदीनबंध्वष्टकं संपूर्णम् ॥

## ३३. श्रीगोविंदाष्टकम् ।

श्रीगणेशाय नमः ॥ चिदानंदाकारं श्रुतिसरससारं
समरसं निराधाराधारं भवजलधिपारं परगुणम् ।
रमाग्रीवाहारं व्रजवनविहारं हरनुतं सदा तं गोविंदं
परमसुखकंदं भजत रे ॥ १ ॥ महांभोधिस्थानं
स्थिरचरनिदानं दिविजपं सुधाधारापानं विहगपति-
यानं यमरतम् । मनोज्ञं सुज्ञानं मुनिजननिधानं ध्रुवपदं
सदा० ॥२॥ धिया धीरैर्ध्येयं श्रवणपुटपेयं यतिवरैर्म-
हावाक्यैर्ज्ञेयं त्रिभुवनविधेयं विधिपरम् । मनोमाना-
मेयं सपदि हृदि नेयं नवतनुं सदा० ॥३॥ महामाया
जालंविमलवनमालंमलहरं सुभालंगोपालं निहतशि-
शुपालं शशिमुखम् । कलातीतं कालं गतिहतमरालं
मुररिपुं सदा० ॥ ४ ॥ नभोविंबस्फीतं निगमगण-
गीतं समगतिं सुरौघे संप्रीतं दितिजविपरीतं पुरि-
शयम् । गिरां पंथातीतं स्वदितनवनीतं नयकरं
सदा० ॥ ५ ॥ परेशं पद्मेशं शिवकमलजेशं शिवकरं
द्विजेशं देवेशं तनुकुटिलकेशं कलिहरम् । खगेशं

नागेशं निखिलभुवनेशं नगधरं सदा० ॥ ६
रमाकांतं कांतं भवभयभयांतं भवसुखं दुराशांतं
निखिलहृदि भांतं भुवनपम् । विवादांतं दांतं दनुज
निचयांतं सुचरितं सदा० ॥७॥ जगज्ज्येष्ठं श्रेष्ठं सुरप
कनिष्ठं क्रतुपतिं बलिष्ठं भूयिष्ठं त्रिभुवनवरिष्ठं वरव
स्वनिष्ठं धर्मिष्ठं गुरुगुणगरिष्ठं गुरुवरं सदा० ॥८॥
गदापाणेरेतद्दुरितदलनं दुःखशमनं विशुद्धा
स्तोत्रं पठति मनुजो यस्तु सततम् । स भुक्त्वा
गौघं चिरमिह ततोऽपास्तवृजिनो वरं वि
स्थानं व्रजति खलु वैकुंठभुवनम् ॥ ९ ॥ इ
श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीगोविंदा
संपूर्णम् ॥

## ३४. रमापत्यष्टकम् ।

श्रीगणेशाय नमः ॥ जगदादिमनादिमजं पु
शरदंबरतुल्यतनुं वितनुम् । धृतकंजरथांगगदं वि
प्रणमामि रमाधिपतिं तमहम् ॥ १ ॥ कमलानन
रतं विरतं हृदि योगिजनैः कलितं ललितम् । कु

सुजनैरलभं सुलभं प्रण० ॥ २ ॥ मुनिवृंदहृदिस्थ
पदं सुपदं निखिलाध्वरभागभुजं सुभुजम् । हृतवा-
सवमुख्यमदं विमदं प्रण० ॥ ३ ॥ हृतदानवदृप्तबलं
सुबलं स्वजनास्तसमस्तमलं विमलम् । समपास्तग-
जेंद्रदरं सुदरं प्रण० ॥४॥ परिकल्पितसर्वकलं विकलं
सकलागमगीतगुणं विगुणम् । भवपाशनिराकरणं
शरणं प्रण० ॥ ५ ॥ मृतिजन्मजराशमनं कमनं
शरणागतभीतिहरं दहरम् । परितुष्टरमाहृदयं सुदयं
प्रण० ॥ ६ ॥ सकलावनिबिंबधरं स्वधरं परिपूरित-
सर्वदिशं सुदृशम् । गतशोकमशोककरं सुकरं प्रण०
॥ ७ ॥ मथितार्णवराजरसं सरसं ग्रथिताखिललो-
कहृदं सुहृदम् । प्रथिताद्भुतशक्तिगणं सुगणं प्रण०
॥ ८ ॥ सुखराशिकरं भवबंधहरं परमाष्टकमेतदन-
न्यमतिः । पठतीह तु योनिशमेव नरो लभते
खलु विष्णुपदं स परम् ॥ ९ ॥ इति श्रीपरमहंस-
स्वामिब्रह्मानंदविरचितं श्रीरमापत्यष्टकं संपूर्णम् ॥

## ३५. कमलापत्यष्टकम् ।

श्रीगणेशाय नमः ॥ भुजगतल्पगतं घनसुंदरं गरुड-

वाहनमंबुजलोचनम् । नलिनचक्रगदाकरमव्य
भजत रे मनुजाः कमलापतिम् ॥ १ ॥ अलिकुल
सितकोमलकुंतलं विमलपीतदुकूलमनोहरम्
जलधिजाश्रितवामकलेवरं भजत रे० ॥ २ ॥ कि
जपैश्च तपोभिरुताध्वरैरपि किमुत्तमतीर्थनिषेवणैः
किमुत शास्त्रकदंबविलोकनैर्भजत० ॥ ३ ॥ मनु
देहमिमं भुवि दुर्लभं समधिगम्य सुरैरपि वांछित
विषयलंपटतामपहाय वै भजत० ॥ ४ ॥ न वनि
न सुतो न सहोदरो नहि पिता जननी न
बांधवः । व्रजति साकमनेन जनेन वै भजत
॥ ५ ॥ सकलमेव चलं सचराचरं जगदिदं सु
धनयौवनम् । समवलोक्य विवेकदृशा द्रुतं भजत
॥ ६ ॥ विविधरोगयुतं क्षणभंगुरं परवशं नवमा
मलाकुलम् । परिनिरीक्ष्य शरीरमिदं स्वकं भजत
॥ ७ ॥ मुनिवरैरनिशं हृदि भावितं शिवविरिं
महेंद्रनुतं सदा । मरणजन्मजराभयमोचनं भजत
॥ ८ ॥ हरिपदाष्टकमेतदनुत्तमं परमहंसज
समीरितम् । पठति यस्तु समाहितचेतसा व्र

विष्णुपदं स नरो ध्रुवम् ॥ ९ ॥ इति श्रीमत्परमहं-
स्वामिब्रह्मानंदविरचितं कमलापत्यष्टकं समाप्तम् ॥

## ३६. संकष्टनाशनविष्णुस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारद उवाच । पुनर्दैत्यं समायांतं दृष्ट्वा देवाः सवासवाः । भयप्रकंपिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ॥ १ ॥ देवा ऊचुः । नमो मत्स्यकूर्मादिनानास्वरूपैः सदा भक्तकार्योद्यतायार्तिहंत्रे । विधात्रादिसर्गस्थितिध्वंसकर्त्रे गदाशंखपद्मारिहस्ताय तेऽस्तु ॥ २ ॥ रमावल्लभायासुराणां निहंत्रे भुजंगारियानाय पीतांबराय । मखादिक्रियापाककर्त्रे विकर्त्रे शरण्याय तस्मै नताः स्मो नताः स्मः ॥३॥ नमो दैत्यसंतापितामर्त्यदुःखाचलध्वंसदंभोलये विष्णवे ते । भुजंगेशतल्पेशयायार्कचंद्रद्विनेत्राय तस्मै नताः स्मो नताः स्मः ॥ ४ ॥ नारद उवाच । संकष्टनाशनं नाम स्तोत्रमेतत्पठेन्नरः । स कदाचिन्न संकष्टैः पीड्यते कृपया हरेः ॥ ५ ॥ इति श्रीपद्मपुराणे सुरनारदसंवादे संकष्टनाशनं नाम विष्णुस्तोत्रं संपूर्णम् ॥

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी



यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।

अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते

स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥

## ३७. शिवकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशिवकवचस्तोत्रमंत्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छंदः । श्रीसदाशिवरुद्रो देवता । ह्रीं शक्तिः । रं कीलकम् । श्रींह्रींक्लीं बीजम् । श्रीसदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः । अथ न्यासः । ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ ह्लां सर्वशक्तिधाम्ने ईशानात्मने अंगुष्ठाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ नं रिं नित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्जनीभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐमं रुं अनादिशक्तिधाम्ने अघोरात्मने मध्यमाभ्यां नमः । ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐशिं रैं स्वतंत्रशक्तिधाम्ने वामदेवात्मने अनामिकाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ वां रौं अलुप्तशक्तिधाम्ने सद्योजातात्मने कनिष्ठिकाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ यं

र: अनादिशक्तिधाम्ने सर्वात्मने करतलकरपृष्ठा
नमः । एवं हृदयादि ॥ अथ ध्यानम् ॥ वज्रं
त्रिनयनं कालकंठमरिंदमम् । सहस्रकरमत्युग्रं
शंभुमुमापतिम् ॥ १ ॥ अथापरं सर्वपुराण
निःशेषपापौघहरं पवित्रम् । जयप्रदं सर्वविपद्वि
चनं वक्ष्यामि शैवं कवचं हिताय ते ॥ २ ॥ ऋ
उवाच ॥ नमस्कृत्य महादेवं विश्वव्यापिनमीश्वर
वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम् ॥ ३
शुचौ देशे समासीनो यथावत्कल्पितासनः । जि
द्रियो जितप्राणश्चिंतयेच्छिवमव्ययम् ॥ ४
हृत्पुंडरीकांतरसन्निविष्टं स्वतेजसा व्याप्तनभोव
शम् । अतींद्रियं सूक्ष्ममनंतमाद्यं ध्यायेत्परानंद
महेशम् ॥ ५ ॥ ध्यानावधूताखिलकर्मबंधश्चि
चिदानंदनिमग्नचेताः । षडक्षरन्याससमाहिता
शैवेन कुर्यात्कवचेन रक्षाम् ॥ ६ ॥ मां पातु दे
खिलदेवतात्मा संसारकूपे पतितं गभीरे । त
दिव्यं वरमंत्रमूलं धुनोतु मे सर्वमघं हृदि
॥ ७ ॥ सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मय

द्घनश्चिदात्मा । अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥ ८ ॥ यो भूस्वरूपेण बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः । योऽपां स्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्यः ॥ ९ ॥ कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः । स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥ १० ॥ प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्रम् ॥ ११ ॥ कुठारवेदांकुशपाशशूलकपालढक्काक्षगुणान्दधानः । चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥ ॥ १२ ॥ कुंदेंदुशंखस्फटिकावभासो वेदाक्षमालावरदाभयांकः । त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योधिजातोऽवतु मां प्रतीच्याम् ॥ १३ ॥ वराक्षमालाभयटंकहस्तः सरोजकिंजल्कसमानवर्णः । त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ॥ १४ ॥ वेदाभयेष्टांकुशपाशटंककपाल-

ढक्काक्षकशूलपाणिः । सितद्युतिः पंचमुखोऽवता
मीशान ऊर्ध्वे परमप्रकाशः ॥ १५ ॥ मूर्धानम
न्मम चंद्रमौलिर्भालं ममाव्यादथ भालनेत्रः ।
ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्व
॥ १६ ॥ पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोल
व्यात्सततं कपाली । वक्त्रं सदा रक्षतु पंच
जिह्वां सदा रक्षतु वेदजिह्वः ॥ १७ ॥ कंठं गि
शोऽवतु नीलकंठः पाणिद्वयं पातु पिनाकपाणिः
दोर्मूलमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखांतको
व्यात् ॥ १८ ॥ ममोदरं पातु गिरींद्रधन्वा म
ममाव्यान्मदनांतकारी । हेरंबतातो मम पातु ना
पायात्कटी धूर्जटिरीश्वरो मे ॥ १९ ॥ ऊरुद्वयं प
कुबेरमित्रो जानुद्वयं मे गजदीश्वरोऽव्यात् । जं
युगं पुंगवकेतुरव्यात्पादौ ममाव्यात्सुरवंद्यपा
॥२०॥ महेश्वरः पातु दिनादियामे मां मध्ययामे
तु वामदेवः । त्रिलोचनः पातु तृतीययामे वृषध्वः
पातु दिनांत्ययामे ॥ २१ ॥ पायान्निशादौ शशि
खरो मां गंगाधरो रक्षतु मां निशीथे । गौरीप

तु निशावसाने मृत्युंजयो रक्षतु सर्वकालम् ॥२२॥
ंत:स्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु
हि:स्थितं माम् । तदंतरे पातु पतिः पशूनां सदा-
शिवो रक्षतु मां समंतात् ॥ २३ ॥ तिष्ठंतमव्याद्भु-
नैकनाथः पायाद्व्रजंतं प्रमथाधिनाथः । वेदांतवे-
ऽवतु मां निषण्णं मामव्ययः पातु शिवः शयानम्
२४ ॥ मार्गेषु मां रक्षतु नीलकंठः शैलादिदुर्गेषु
रत्रयारिः । अरण्यवासादिमहाप्रवासे पायान्मृग-
याध उदारशक्तिः ॥ २५ ॥ कल्पांतकाटोपपटुप्र-
पस्फुटाट्टहासोच्चलिताण्डकोशः । घोरारिसेनार्णव-
र्निवारमहाभयाद्रक्षतु वीरभद्रः ॥ २६ ॥ पत्त्य-
मातंगघटावरूथसहस्रलक्षायुतकोटिभीषणम् ।
क्षौहिणीनां शतमाततायिनां छिंद्यान्मृडो घोरकु-
रधारया ॥ २७ ॥ निहंतु दस्यून्प्रलयानलार्चिर्ज्व-
त्रिशूलं त्रिपुरांतकस्य । शार्दूलसिंहर्क्षवृकादिहिं-
न्संत्रासयत्वीशधनुः पिनाकः ॥ २८ ॥ दुःस्व-
ः शकुनदुर्गतिदौर्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्य-
सि । उत्पाततापविषभीतिमसद्ग्रहार्तिव्याधींश्च

नाशयतु मे जगतामधीशः ॥ २९ ॥ ॐनमो
वते सदाशिवाय सकलतत्त्वात्मकाय सर्वमंत्र
पाय सर्वयंत्राधिष्ठिताय सर्वतंत्रस्वरूपाय सर्वतत्त्व
दूराय ब्रह्मरुद्रावतारिणे नीलकंठाय पार्वतीम
प्रियाय सोमसूर्याग्निलोचनाय भस्मोद्धूलितवि
महामणिमुकुटधारणाय माणिक्यभूषणाय सृ
तिप्रलयकालरौद्रावताराय दक्षाध्वरध्वंसकाय
कालभेदनाय मूलाधारैकनिलयाय तत्त्वा
गंगाधराय सर्वदेवाधिदेवाय षडाश्रयाय वे
साराय त्रिवर्गसाधनायानंतकोटिब्रह्मांडनायका
वासुकितक्षककर्कोटकशंखकुलिकपद्ममहापद्मे
हानागकुलभूषणाय प्रणवस्वरूपाय चिदाकाशा
शदिक्स्वरूपाय ग्रहनक्षत्रमालिने सकलाय कलं
ताय सकललोकैककर्त्रे सकललोकैकभर्त्रे सकल
संहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणे
निगमगुह्याय सकलवेदांतपारगाय सकललोक
प्रदाय सकललोकैकशंकराय शशांकशेखराय श
निजावासाय निराभासाय निरामयाय नि

निर्लोभाय निर्मदाय निश्चिंताय निरहंकाराय निरंकुशाय निष्कलंकाय निर्गुणाय निष्कामाय निरुपप्लवाय निरवद्याय निरंतराय निष्कारणाय निरंतकाय निष्प्रपंचाय निःसंगाय निर्द्वंद्वाय निराधाराय नीरागाय निष्क्रोधाय निर्मलाय निष्पापाय निर्भयाय निर्विकल्पाय निर्भेदाय निष्क्रियाय निस्तुलाय निःसंशयाय निरंजनाय निरुपमविभवाय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानंदाद्वयाय परमशांतस्वरूपाय तेजोरूपाय तेजोमयाय जय जय रुद्र महारौद्र भद्रावतार महाभैरव कालभैरव कल्पांतभैरव कपालमालाधर खट्वांगखड्गचर्मपाशांकुशडमरुशूलचापबाणगदाशक्तिभिंदिपालतोमरमुसलमुद्गरपाशपरिघभुशुंडीशतघ्नीचक्राद्यायुधभीषणकर सहस्रमुख दंष्ट्राकरालवदन विकटाट्टहासविस्फारितब्रह्मांडमंडल नागेंद्रकुंडल नागेंद्रहार नागेंद्रवलय नागेंद्रचर्मधर मृत्युंजय त्र्यंबक त्रिपुरांतक विश्वरूप विरूपाक्ष विश्वेश्वर वृषभवाहन विषविभूषण विश्वतोमुख सर्वतो रक्ष रक्ष मां ज्वल ज्वल महामृत्युमपमृत्यु-

